# ॥ श्रीललिता चतुःषष्ट्युपचारसंग्रहः ॥

ॐ हृन्मध्यनिलये देवि ललिते परदेवते ।
चतुष्षष्ट्युपचारांस्ते भक्त्या मातः समर्पये ॥ १॥

कामेशोत्सङ्गनिलये पाद्यं गृह्णीष्व सादरम् ।
भूषणानि समुत्तार्य गन्धतैलं च तेऽर्पये ॥ २॥

स्नानशालां प्रविश्याऽथ तत्रस्थ मणिपीठके ।
उपविश्य सुखेन त्वं देहोद्वर्तनमाचर ॥ ३॥

उष्णोदकेन ललिते स्नापयाम्यथ भक्तितः ।
अभिषिञ्चामि पश्चात्त्वां सौवर्णकलशोदकैः ॥ ४॥

धौतवस्त्रप्रोच्छनं चारक्तक्षौमाम्बरं तथा ।
कुचोत्तरीयमरुणमर्पयामि महेश्वरि ॥ ५॥

ततः प्रविश्य चालेपमण्टपं परमेश्वरि ।
उपविश्य च सौवर्णपीठे गन्धान्विलेपय ॥ ६॥

कालगरुजधूपैश्च धूपये केशपाशकम् ।
अर्पयामि च माल्यादि सर्वर्तुकुसुमस्रजः ॥ ७॥

भूषामण्टपमाविश्य स्थित्वा सौवर्णपीठके ।
माणिक्यमुकुटं मूर्ध्नि दयया स्थापयाम्बिके ॥ ८॥

शरत्पार्वणचन्द्रस्य शकलं तत्र शोभताम् ।
सिन्दूरेण च सीमन्तमलङ्कुरु दयानिधे ॥ ९॥

भाले च तिलकं न्यस्य नेत्रयोरञ्जनं शिवे ।
वालीयुगळमप्यम्ब भक्त्या ते विनिवेदये ॥ १०॥

मणिकुण्डलमप्यम्ब नासाभरणमेव च ।
ताटङ्कयुगळं देवि यावकञ्चाधरेऽर्पये ॥ ११॥

आद्यभूषणसौवर्णचिन्ताकपदकानि च ।
महापदकमुक्तावल्येकावल्यादिभूषणम् ॥ १२॥

छन्नवीरं गृहाणाम्ब केयूरयुगलं तथा ।
वलयावलिमङ्गुल्याभरणं ललिताम्बिके ॥ १३॥

ओड्याणमथ कट्यन्ते कटिसूत्रञ्च सुन्दरि ।
सौभाग्याभरणं पादकटकं नूपुरद्वयम् ॥ १४॥

अर्पयामि जगन्मातः पादयोश्चाङ्गुलीयकम् ।
पाशं वामोर्ध्वहस्ते ते दक्षहस्ते तथाङ्कुशम् ॥ १५॥

अन्यस्मिन्वामहस्ते च तथा पुंड्रेक्षुचापकम् ।
पुष्पबाणांश्च दक्षाधः पाणौ धारय सुन्दरि ॥ १६॥

अर्पयामि च माणिक्यपादुके पादयोः शिवे ।
आरोहावृतिदेवीभिः चक्रं परशिवे मुदा ॥ १७॥

समानवेषभूषाभिः साकं त्रिपुरसुन्दरि ।
तत्र कामेशवामाङ्कपर्यङ्कोपनिवेशिनीम् ॥ १८॥

अमृतासवपानेन मुदितां त्वां सदा भजे ।
शुद्धेन गाङ्गतोयेन पुनराचमनं कुरु ॥ १९॥

कर्पूरवीटिकामास्ये ततोऽम्ब विनिवेशय ।
आनन्दोल्लासहासेन विलसन्मुखपङ्कजाम् ॥ २०॥

भक्तिमत्कल्पलितिकां कृतीस्यां त्वां स्मरन् कदा ।
मङ्गलारार्तिकं छत्रं चामरं दर्पणं तथा ।
ताळवृंतं गन्धपुष्पधूपदीपांश्च तेऽर्पये ॥ २१॥

श्रीकामेश्वरि तप्तहाटककृतैः स्थालीसहस्रैर्भृतम्
दिव्यान्नं घृतसूपशाकभरितं चित्रान्नभेदैर्युतम् ।
दुग्धान्नं मधुशर्करादधियुतं माणिक्यपात्रार्पितम्

माषापूपकपूरिकादिसहितं नैवेद्यमम्बाऽर्पये ॥ २२॥

साग्रविंशतिपद्योक्तचतुष्षष्ट्युपचारतः ।
हृन्मध्यनिलया माता ललिता परितुष्यतु ॥ २३॥

श्रीमुखाख्यस्य वर्षस्य तुलायां शुक्लपक्षके ।
चतुर्थ्यामपराह्णे च ललितार्पितमानसः ॥ २४॥

साग्रविंशतिपद्यैस्तु चतुष्षष्ट्युपचारकान् ।
समग्रहीत्पराम्बायाः प्रीत्यै नारायणो मुदा ॥ २५॥

नारायणः श्रीपुरुषोत्तमात्मजोऽलिखन्महीषूरपुरे वसन्कृती ।
देवीसपर्यामखिलाभिलाषदां कामेशवामाङ्कगता प्रसीदतु ॥

॥ इति शिवम् ॥